**अलंकृञ-निराकृञ-प्रजन-उत्पत-उत्पच-उन्मद-रुच-अपत्रप-वृतु-वृधु-सह-चर इत्येभ्य इष्णुः ॥८१॥**

कृष्णमलङ्करिष्णुः निराकरिष्णुः, प्रजनिष्णुरित्यादि ।

अलंपूर्व्वं डुकृञ करणे निराङ पूर्व्वं-डुकृञ, प्रपूर्व्वं जनी प्रादुर्भावे, उतपूर्व डुपचप पाके, उतपूर्व्वं पतलृ गतौ, उतपूर्व्वं मदी हर्षे रुच दीप्तौ, अपपूर्व्व त्रपू लज्जायां वृतु वर्त्तने, वृधु वृद्धौ, सहमर्षणे, चरगतौ, इन सबके उत्तर में तच्छीलादिष्वर्थेषु इष्णु भवति । कृष्णमलङ्करिष्णुः, अच्युताभेत्यदिना षष्ठी निषेधः, एवं निराकरिष्णुः, प्रजनिष्णुः ॥८१॥

**जि-भूभ्यां स्नुक् ॥८२॥**

जिष्णुः, भूष्णुः ।

जि जये, भूसत्तायाम् दोनों के उत्तर में तच्छीलादि अर्थ में में स्नुक् होता है । क् इत् जिष्णुः, भूष्णुः ॥८२॥

**ग्ला स्थाभ्यां स्नुः ॥८३॥**

ग्लास्नुः, स्थास्नुः ।

तच्छीलादि अर्थ में ग्लै हर्षक्षये, ष्ठा गति निवृत्तौ, के उत्तर में स्नु होगा । स्थास्नुः स्थिरतरः । स्थास्नुः स्थिरतरः स्थेयानित्यमरः ॥८३॥

**क्रोध भूषार्थेभ्यश्चानः ॥८४॥**

क्रोधनः, कोपनः, भूषणः, मण्डनः । उकण-लाषुकः घातुकः । आकट्-जल्पाकः ।

क्रोधार्थं, भूषार्थ के उत्तर में अन होगा । क्रोधनः, क्रुध रोषे कोपनः, कोप-रोषे, भूषणः, भूष अलङ्कारे, मण्डनः, मडिव भूषायाम् । उकण प्रत्यय लष हन पत पद स्था भू वृष कम गस शृ स्य उकण् ।

लष कान्तौ, हन हिंसागत्योः, पतलृ गतौ, पद गतौ, ष्ठा गति निवृत्यौ भू सत्तायां, वृषु सेचने, कमु कान्तौ, गमलृ गतौ, शृ हिंसायां, के उत्तर में उकण् प्रत्यय होगा। ण इत्, लाषुकः, घातुकः जल्प भिक्ष कुट्ट लुण्ठ वृङ आकट्। जल्पाकः, भिक्षाकः, कुट्टाकः, लुण्ठाकः, वरांकः ॥८४॥

स्पृहि-गृहि-पति-कृपि-दयि-निद्रा-तन्द्रा-श्रद्धा-शीभ्य आलुः॥८५

स्पृहयालुः, गृहयालुः, पतयालुः, कृपालु, दयालुः। क्वरप्-इत्वरः, लक्ष्म्यामीप्-इत्वरी, नश्वरी। ऊकः-जागरूकः यायजूकः, जञ्जपूकः, दन्दशूकः, वावदूकः। रः-नम्रः उः-हरिभक्ति चिकीर्षुः।

स्पृह प्रभृति के उत्तर उसी अर्थ में आलु प्रत्यय होगा। स्पृह ईप्सायाम्। स्पृहयालुः, पतयालुः, पतगतौ। दयालुः दय दान गति हिंसादानेषु च। द्रा कुत्सायाम्-निपूर्व्व निद्रालुः। शीङ् स्वप्ने शयालुः। कृपालुः कृपलृ धातु। इन् गतौ, नश अदर्शने, जिजये, सृ गतौ, धातु के उत्तर में क्वरप् होगा। क्वपावितौ, इत्वरः- वामनात्तुक्। लक्ष्मीलिङ्ग में ईप् होने से इत्वरी, नश्वरी पद होगा। यज-जप-दनश-वदिभ्यो यङन्तेभ्य ऊकः याजजूकः, जागरूकः, जञ्जपूकः, दन्दशूकः, वावदूकः। नमि-कम्पि-स्मि-कमि-हिंसि दीपादिभ्य रः। नम्रः सनन्त-शस-भिक्षिभ्य उः-हरिभक्ति चिकीर्षुः ॥८५॥

डुरामेतः क्त्रिमः क्रिया निर्वृत्तेः ॥८६॥

कृत्रिमम्, पक्त्रिमम्।

क्रिया के द्वारा निष्पन्न होना सूचित होने पर डुराम इत् युक्त धातु के उत्तर में क्त्रिम प्रत्यय होता है, क इत् होता है। क्रिया धात्वर्थः करणेन निर्वृत्तं कृत्रिमम् एवं पाकेन निर्वृत्तं-पक्त्रिमम् ॥८६॥

**दुरामेतोऽथुर्भावे पुंसि ।।८७।।**

वेपथुः, श्वयथुः ।

भाव वाच्य में दुराम इत युक्त धातु के उत्तर में पुरुषोत्तम लिङ्ग में 'अथु' प्रत्यय होता है । टु वेपृ-चलने वेपथुः-कम्पः । श्वयथुः, टु ओश्विगतिवृद्धयोः, श्वयथुः-शोथः ।।८७।।

**क्ति लक्ष्म्यां भावे ।।८८।।**

कृतिः, भूतिः, प्रह्लत्तिः, घट्टिः, अपचितिः, वतिः, दरिद्रातिः, कण्डूवतिः, एवं हन्तिः, वन्तिः, तन्ति, भणितिः, निपठितिः, निगृहीतिः, प्रथितिरित्यादि ।

भाव वाच्य में धातु के उत्तर में लक्ष्मी लिङ्ग में क्ति प्रत्यय होता है। कृतिः, डुकृञ् करणे, नेड् वनतीत्यनेन भूतिरित्यत्र इड् निषेधः। प्रह्लत्तिः, ह्लादो सुखी, घट्टिः-घटचेष्टायाम् । अपचितिः-पूजा, चायृ पूजानिशामनयाः, स्याने चिभवति, वन व्यापृतौ बन्धणे प्रीतौ सम्भक्तौ, भ्वादे वतिः साधुः । वतिरिति निपाताद्धरि वेणुहरः । दरिद्रा दुर्गतौ, दरिद्राते दरिद्रातिः कण्डूयतेः कण्डूतिः, बध्यात्-हन्तिः, वन्यात् वन्तिः, तन्यात् तन्तिः, भणादेस्तु भणितिः, निपठितिः निगृहीतिः, प्रथितिः-प्रथ-प्रख्याने ।।८८।।

**क्तेर्निः ।।८९।।**

कीर्णिः, लूनिः, ग्लानिः, इत्यादि ।

कृ विक्षेपे-कीर्णिः, लूञ् छेदने-लूनिः, ग्लै-हर्षक्षये-ग्लानिः ।।८९।।

**सम्पदादेः क्विप्-क्तौ भावे लक्ष्म्याम् ।।९०।।**

सम्पत्, विपत्, प्रतिपत् इत्यादि ।

भाव वाच्य में सम्पदादि शब्द के उत्तर में लक्ष्मीलिङ्ग में क्विप्क्ती प्रत्यय होते हैं । सम्पत्, विपत् प्रतिपत् पक्षे-सम्पत्तिरित्यादि, आकृतिगणोऽयम् ।।९०।।

**भावे लक्ष्म्यां ङाप्, नतु क्तिः ॥९१॥**

ईहा, ऊहा, इन्दा, शिक्षा, व्यतीहा इत्यादि।

भाव वाच्य में लक्ष्मी लिङ्ग में ङाप् होता है। किन्तु क्ति प्रत्यय नहीं होता है। ईह चेष्टायाम्-ईहा, ऊह वितर्के ऊहा, इदि परमेश्वर्य्ये इन्दा, शिक्ष विद्योपादाने, शिक्षा, व्यतीहा व्यतीक्षेपि ॥९१

**जागृ-शुभ-जॄ षां गोविन्दश्च ॥९२॥**

जागरा, शोभा, जरा, भिदा, छिदा, तृषा, पीड़ा, चिन्ता, पूजा, कथा, अर्च्चा, चर्च्चा इत्यादि।

जागृ निद्राक्षये, शुभ दीप्तौ, जॄ ष वयोहानौ इन सब धातु के उत्तर में भाव वाच्य में लक्ष्मीलिङ्ग में ङाप् एवं गोविन्द होता है। जागरा, शोभा, जरा, भिदा, छिदा, तृषा, पीड़ा, चिन्ता, पूजा, कथा अर्च्चा, चर्च्चा अर्च्च पूजायाम्-चुरादिः, चर्च्चा अध्ययने चुरादि ॥९२॥

**सोपेन्द्रारामाच्च ॥९३॥**

उपधा, श्रद्धा, अन्तर्द्धा, अवस्था, संस्था, व्यवस्था इत्यादि।

उपेन्द्र एव आराम के उत्तर में भाव वाच्य में लक्ष्मी लिङ्ग में ङाप् होता है। उपधा-डुधाञ् धारणपोषणयोः। श्रद्धा-श्रदित्यव्यम्, अन्तर्द्धा अवस्था-ष्ठा गति निवृत्तौ एवं व्यवस्थोत्यादि ॥९३॥

**ण्यन्तादासः श्रन्थादेश्चानो भावे लक्ष्म्यां, नतु कृतेः ॥९४॥**

कारणा, भावना, घट्टना, मार्गणा, आसना, देवना, वेदना, अन्वेषणा, पर्य्येर्षणा, एषणा इत्यादि।

ण्यन्त के उत्तर आस धातु के उत्तर में एवं श्रन्थादि के उत्तर में भाव वाच्य में लक्ष्मी लिङ्ग में अन प्रत्यय होता है। किन्तु कृ धातु के उत्तर अन नहीं होगा। कृष्णदाप् लक्ष्म्यां' तद्धित प्रकरणोक्तं सूत्रम्। कारणा-ण्यन्तात् कृधातोरनः। भावनेति ण्यन्ताद् भूधातोरनः। घट्टना-घट्ट चलने-भ्वादिः चुरादिः, ण्यन्तादना। अन्वेषणा इष गतौ, पर्य्येषणेति, एषणेत्यादि ॥९४॥

**अनो भावे ।।६५।।**

ज्ञानं, भवनं, कीर्त्तनं, लिखनं, लेखनम् नित्यं लेखनी, मिलनं, मेलनम् ।

भाव वाच्य में धातु के उत्तर में अन होगा। ज्ञा अवबोधने ज्ञानं, भू-भवनं, कृ संशब्दने कीर्त्तनं, लिख लिखने-लिखनं, लेखनम् नित्यम् लेखनी, मिलनं-मेलनम् ।।६५।।

**टनः करणाधिकरणयोः ।।६६।।**

व्याक्रियन्ते व्युत्पाद्यन्ते, अर्थपर्य्यवसानाः क्रियन्ते शब्दा अनेनेति-व्याकरणं, शब्दानुशासनं शास्त्रम् । अधिकरणे टनः गोदोहनी, शयनी, रमणी ।

करण एवं अधिकरण वाच्य में धातु के उत्तर में टन होगा। दैत्य व्रश्चनमिति ओव्रश्चू छेदने, दैत्यान्, वृश्चत्यनेनेति करणे टनः। व्याक्रियन्ते-अर्थात् व्युत्पाद्यन्ते अर्थात् अर्थ पर्य्यवसानाः क्रियन्ते। अर्थ पर्य्यवसाना इति प्रकटितार्थाः। व्याकरणमिति-वि-आङ् पूर्व डु कृञ् करणे, व्याकरण पदस्यार्थं कथनं-शब्दानुशासनं शास्त्रम् । गोदोहनी, दुह प्रपूरणे, गां दोग्धि अस्यामित्यधिकरणे टनः, शयनीति शीङ् स्वप्ने शेतेऽस्यामित्यधिकरणे टनः। शयनीति शीङ् स्वप्ने शेतेऽस्यामित्यधिकरणे टनः ।।६६।।

**टनः कर्म्मादौ च ।।६७।।**

कृष्णेन भुज्यन्ते-कृष्ण भोजनाः शालयः ।

कर्म्मादि वाच्य में धातु के उत्तर में टन होगा। कृष्णभोजनाः, भुज पालन व्यवहारयोः कर्म्मणि टनः। शालयः-धान्यविशेषः ।।६७।।

अम्बष्ठादयः ॥९८॥

अथात्र षत्वानि, षत्वेन साधवः अम्बष्ठः, भूमिष्ठः, सव्येष्ठः, परमेष्ठि इत्यादि ।

अम्बष्ठः-अम्बायां तिष्ठति, अम्बायां स्थीयते इति वा वाक्ये स्थोभावः, भूमौ तिष्ठति-भूमिष्ठः, कः, निपातात् षत्वम्, सव्येष्ठः, सव्ये तिष्ठतीति कः निपातात् षत्वं, समासे ङे नं महाहरः । वामं शरीरे सव्यं स्यादित्यमरः । परमेष्ठीति-परमे तिष्ठतीति, परमे पूर्व्वपदे तिष्ठतेर्ङिन्, आरामहरः, निपातात् षत्वम् परमेष्ठी ब्रह्मा ॥९८॥

इति संक्षेप–श्रीहरिनामामृताख्ये वैष्णव व्याकरणे पञ्चमं कृदन्त प्रकरणं समाप्तम् ॥५॥



[ षष्ठम् ]

# अथ समास-प्रकरणम्

कृष्णस्य विग्रहे भाति समासेनाखिलं पदम् ।
इतीव स्मारकं वक्ष्ये समास-पदविग्रहम् ।।१।।

समासो बहुलम् (१)

तत्र श्यामराम-कर्म्मधारयौ, त्रिरामी-द्विगू, कृष्ण पुरुष
तत् पुरुषौ, पीताम्बर-बहुव्रीही, रामकृष्ण-द्वन्द्वौ
समानार्थौ ज्ञेयौ, अव्ययीभावस्तु षष्ठः ।।२।।

समासवाक्यं विग्रहः ।।३।।

विशेषणं तुल्याधिकरणेन ।।४।।

तुल्याधिकरणेन सह विशेषणं समस्यते । जाति गुण क्रिया द्वारा यस्य विशेषः कथ्यते, तद् विशेष्यम् । येन तस्य विशेषः कथ्यते, तद् विशेषणम् । यथा—गोपः कृष्णः, गोपी राधा, विहारि गोकुलं विशेष्यम्, अव्यय विशेषणं ब्रह्म, यथा महत् स्वः केचिच्छब्दा विशेषणत्वेऽपि स्वलिङ्गं न त्यजन्ति, प्रधानं-कृष्णः । प्रधानं राधा । अत्र श्यामराम संज्ञोऽयम् । कर्मधारय इति प्राञ्चः । श्याम श्चासौ रामश्चेति रामश्चासौ श्यामश्चेति वा विग्रहौ ।।४।।

अन्तरङ्ग स्वादे र्महाहर एकपदत्वारम्भे ।
नामान्तरत्वप्राप्त्या समस्तात् पुनः स्वादयः
स्ततोऽवान्तरानेक-पदत्वेऽपि एकपदत्वम् । श्यामरामः ।।५।।

समास प्रकरण नामक षष्ठ प्रकरण आरम्भ में मङ्गलाचरण प्रसङ्ग में श्लेष अलङ्कार के द्वारा कहते हैं, समास पद विग्रह कृष्ण में अखिल स्थान समूह हैं, इसके स्मारक रूप में समास पद का

विग्रह वाक्य को मैं कहता हूँ। अर्थात् संक्षेप में समस्त स्थान जिन श्रीकृष्ण के शरीर में विद्यमान हैं, उन श्रीकृष्ण का कीर्त्तन मैं करता हूँ। इवेति वाक्यालङ्कारे द्योतकार्थे च। ग्रन्थ पक्ष में कृष्णस्य विग्रहे कृष्ण सम्बन्धिनि समास वाक्ये, समासेन तत् पदेन उपलक्षितं अखिल सर्व्वं पद भाति विराजते, इतीव स्मारकं तदिव चिन्तनेन निष्पादयितु समास पद विग्रहं वक्ष्ये (१)

स बहुव्रीहि-द्विगुता-मात्रे लुब्धोऽस्मि सद्वन्द्वः।
तत् पुरुषः–कर्म्मधारय–भक्त्येनाव्ययीभावः॥

बहुल लक्षणाक्रान्त समास प्रकरण है। यह वासुदेव नामक अधिकार है। उक्त षड् विध समास के मध्य में कर्म्मधारय समास का नाम श्यामराम है, द्विगु-त्रिरामी, तत् पुरुष-कृष्णपुरुष, बहुव्रीही-पीताम्बर, द्वन्द्व-रामकृष्ण, एवं षष्ठ समास का नाम अव्ययी भाव है। नास्ति व्ययीभावो यस्मादिति विग्रहे अव्ययीभाव शब्दो भगवद्वाची है। अतः संज्ञान्तर की कल्पना इसमें नही हुई है।।१-२।। मध्य में भिन्न पद होने पर भी एकनाम रूप में योग करने का नाम समास है। समसनमित्यर्थे सपूर्व्वं असु क्षेपणे घण् समसनं पदानामेकीकरणं समासः। यह समास परस्पर सम्बन्धान्वित पदों का ही होगा। समास के वाक्य को विग्रह वाक्य कहते हैं।।३।।

विशेष समास का प्रकरण कहते हैं। तुल्याधिकरण विशेषण के सहित तुल्याधिकरण विशेषण का समास होगा। जाति गुण क्रिया द्वारा यस्य विशेष कथ्यते तद्विशेष्यं, येन तस्य विशेषः कथ्यते तद्विशेषणम्। उदाहरण-गोपः कृष्णः, गोपी राधा, विहारि गोकुलम् विशेष्यम्। अव्यय का विशेषण का ब्रह्मलिङ्ग होता है। यथा-महत्-स्वः, कतिपय शब्द विशेषण होने पर भी निज लिङ्ग को परित्याग नहीं करते हैं। यथा-प्रधानं-कृष्णः, प्रधानं-राधा,

अनन्तर श्यामराम समास को कहते हैं। प्राचीनगण इसको कर्म्मधारय कहते हैं। श्यामश्चासौ रामश्चेति श्यामरामः, इस प्रकार रामश्चासौ श्यामश्चेति श्यामरामः ॥४॥

**अन्तरङ्गस्वादे र्महाहर एकपदत्वारम्भे ।**

नामान्तरत्व-प्राप्त्या समस्तात् पुनः स्वादयस्ततोऽवान्तरानेक पदत्वेऽप्येकपदत्वम् श्यामरामः।

'प्रकृत्याश्रितं प्रकृतावपि पूर्व्वं पूर्व्वमन्तरङ्गम्' इस नियम से समास वाक्य स्थित स्वादि का महाहर होगा, किन्तु समास होने के पश्चात् विहित स्वादि का महाहर नहीं होगा। समासबद्ध पद का नामान्तरत्व होने के कारण इसके उत्तर स्वादि विष्णुभक्ति होती है, अवान्तर अनेक पद होने पर भी एक पद होता है, 'श्यामरामः' हुआ। समस्त श्यामराम शब्द का नामान्तरत्व होने के कारण पुनर्वार स्वादि होते हैं। यहाँ श्याम पद विशेषण है, वर्णान्तर राम को पृथक् करके बोध कराना है। जहाँ श्यामत्व है, वहाँ राम संज्ञत्व है, यह तुल्याधिकरण है। किन्तु कृष्णस्य पुरुषः स्थल में कृष्ण शब्द पुरुष का विशेषण तो है, किन्तु यह व्यधिकरण है, तुल्याधिकरण नहीं है। यदुक्तं–भिन्न प्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् ॥५॥

**उपमानमुभयस्थ धर्म्म-वचनैः ॥६॥**

मेघ इव श्यामः, मेघश्यामः। मृगीव चाला-मृग चपला।

उभय धर्म्म वचन के सहित उपमान का समास होता है। मेघ इव श्यामः मेघश्यामः। यहाँ श्याम शब्द उपमानोपमेयस्थ धर्म्म वचन है, मेघ उपमान है, एवं कृष्ण उपमेय है। मृग चपला, वाच्य लिङ्ग लक्ष्मी स्तुल्याधिकरण लक्ष्म्यामित्यनेन पुरुषोत्तमवत्त्वम्, चपलाशब्दः, उपमानोपमेयस्थ धर्म्म वचनः। अत्र मृग्या उपमानत्वं गोप्या उपमेयत्वम् ॥६॥

**उपमेयं व्याघ्रादिभिरुपमानैः ॥७॥**

पुरुषो व्याघ्र इव पुरुष व्याघ्रः।

व्याघ्रादि उपमान के सहित उपमेय का समास होता है। पुरुषो व्याघ्र इव। उपमेय का पूर्व्व निपात हुआ है। इस प्रकार पुरुष सिंहः, पुरुष कुञ्जरः, मुखपद्मम, मुखकमलम्, मुखचन्द्रः, प्रभृति होते हैं ॥७॥

**कुप्रादयो मध्यपद-लोपश्च ॥८॥**

कुत्सितश्चासौ पुरुषश्चेति कुपुरुषः।
गोवर्द्धन नामागिरिः, गोवर्द्धनगिरिः।

स्वादि विष्णुभक्ति युक्त के सहित कुप्रादि का समास होता है, एवं मध्यपद लोप भी होता है। कुपुरुषः, यहाँ कु शब्द, पापार्थ नहीं है, किन्तु असुन्दरार्थ है। योग विभाग से गोवर्द्धननामागिरिः, गोवर्द्धनगिरिः। योग विभाग से कुप्रादिभिन्न का भी स्वाद्यन्त के सहित समास होता है, मध्य पद लोप भी होता है ॥८॥

**इवेन नित्यं समासो विष्णुभक्त्यलोपश्च ॥९॥**

मेघ इव।

इव शब्द के सहित नित्य समास होता है, विष्णुभक्ति का लोप भी नहीं होता है। उदाहरण-मेघ इव। या इच्छा यहच्छा ॥९॥

**समाहारे त्रिराम्यामेकत्वं ब्रह्मत्वञ्च ॥१०॥**

पञ्चानां गोपीनां समाहारः पञ्चगोपि। समं हरति समाहारः।

समाहार वाच्य में त्रिरामी में एकत्व एवं ब्रह्मत्व होता है। समाहृति को समाहार कहते हैं। पञ्चगोपिः, पञ्चानां गोपीनां समाहारः इति विग्रहे पञ्चगोपि ॥१०॥

## त्रिराम्या ईप् ॥११॥

त्रिरामी, पञ्चाध्यायी ।

अरामान्ता त्रिरामी लक्ष्मीः, आवन्ता वा त्रिराम्या ईप् । त्रयोरामाः समाहृता इति त्रयाणां रामाणां समाहारः । पञ्चानां अध्यायानां आनयनं गम्यते ।।११।।

## कृष्णपुरुषेण नञ् समस्यते ।।१२।।

ञराम इत् । न वैष्णवोऽवैष्णवः । सर्व्वेश्वरे तु नुट् च समासे अनवैष्णवः ।

स्वाद्यन्त के सहित नञ् का समास होगा, ञ् राम इत् होता है । न वैष्णवः इति बिग्रहे नञोऽराम शेषः, इति अवैष्णवः, न अवैष्णवः, अनवैष्णवः । नञ् कृष्णपुरुषोऽयम्, सर्व्वेश्वरेतु नुट् च समासे इत्यनेन नञोऽरामशेषे नुट् च ।।१२।।

## प्राप्तापन्ने द्वितीयया ।।१३।।

प्राप्तः सखायं-प्राप्तसखः ।

प्राप्तापन्ने द्वितीयया सह समस्येते द्वितोययेति द्वितीयान्तेनेत्यर्थः, प्राप्त सख इति राजाहः सखिभ्य इत्यनेन केशवाराम: अ इ द्वयस्य हर इत्यनेन इरामहरः ।।१३।।

## द्वितीया श्रितादिभिः ।।१४।।

कृष्णंश्रितः, कृष्णश्रितः, संसारातीतः, वैकुण्ठगतः इत्यादि ।

आदि ग्रहणात् खट्वारूढ़ः ।

द्वितीयान्त विष्णुपद का समास श्रितादि शब्द के सहित होगा । कृष्णंश्रितः कृष्णश्रितः कर्त्तरि क्तः । संसारातीत इति संसारमतीत इति विग्रहः, वैकुण्ठं गतः वैकुण्ठ गतः । आदि ग्रहणात् दुर्म्मानिनि वाच्ये खट्वारूढ़ इति भवति । दुर्म्मानी निन्द्यः, तस्मात् केनापि प्रकारेण निन्द्यत्वे गम्ये आरूढ़ादीनां श्रितादित्वमिति भावः, खट्वारूढ़ो मूर्खादिः ।।१४।।

## तृतीयान्तार्थकृतगुणवचनेनार्थादिभिश्च ॥१५॥

चक्रेण कृतः खण्डः चक्रखण्डः। कृष्णेनार्थः, कृष्णार्थः।

कृष्णसदृशः इत्यादि।

तृतीयान्तार्थ कृत श्चासो गुण वचनश्चेति, तेन अर्थादिभिश्च सह तृतीयान्तं समस्यते। गुणवचनस्य लक्षणमाह गुणमुक्त्वा यो गुणिनि वर्त्तते स गुणवचनः, चक्रेण कृतः खण्डः, चक्रखण्डः। अत्र तृतीयान्तार्थश्चक्रास्त्रमस्त्र, तेनकृतो गुणः खण्डितत्वं, तदुक्त्वा गुणिनि वर्त्तमानः खण्ड इति। कृष्णेनार्थः, कृष्णार्थः भक्तिपूर्व्वः, कृष्णसदृशः, इत्यादि ॥१५॥

## कर्त्तृ करणे कृता ॥१६॥

कृष्णहतः, चक्रछिन्नः।

कृदन्त के सहित तृतीयान्त पद का समास होगा। कृष्णहतः कृष्णेन हत इति विग्रहः, अत्र तृतीयान्तस्य कर्त्तृत्वम्। चक्रछिन्न इति–चक्रेणच्छिन्न इति विग्रहः, अत्र तृतीयान्तस्य करणत्वम् ॥१६॥

## अथ मध्यपदलोपिनः ॥१७॥

## पूरणद्रव्यं पात्रेण ॥१८॥

गङ्गाजलेन पूर्णो घटः गङ्गाजलघटः। अन्यत्रापि-श्रिया युक्तः कृष्णः

श्रीकृष्णः।

मध्यपद लोपिनः, यह अधिकार सूत्र है। प्रभु नामक अधिकार है, पात्र के सहित तृतीयान्त शब्द पूरण द्रव्य का समास होगा। मध्यपद का लोप भी होगा। गङ्गाजलेन पूर्णः घटः, अन्यत्रापि स्वाद्यन्तेन समं तृतीयान्तं समस्यते, मध्यपदलोपश्च भवति। अन्यत्रापि दृश्यते, श्रिया युक्तः कृष्ण श्रीकृष्णः ॥१७-१८॥

**चतुर्थी प्रकृत्या ॥१९॥**

हरिमन्दिराय इष्टकाः—हरिमन्दिरेष्टकाः।

प्रकृत्या सह चतुर्थ्यन्ता विकृतिः समस्यते। विकृतिरिति अर्थाल्लब्धमिति ज्ञेयम्। हरिमन्दिराय इष्टकाः—हरिमन्दिरेष्टकाः। यदर्थमन्यत्तस्माच्चतुर्थी, इत्यनेन चतुर्थी। अत्र हरिमन्दिरस्य विकृतत्वं, इष्टकानां प्रकृतित्वमिति ॥१९॥

**कृता यथाभिधानम् ॥२०॥**

कृष्णाय देयम्—कृष्णदेयम्।

यथाभिधानं कृदन्तेन सह चतुर्थ्यन्तं विष्णुपदं समस्यते। यथाभिधानं—अभिधानमनतिक्रम्येत्यर्थः। कृष्णदेयम्—कृष्णाय देयमिति ॥२०॥

**पञ्चमी भय-भीत-भीभिरानीतादिभिश्च ॥२१॥**

कृष्णात् भयम्—कृष्णभयम्। वृन्दावनात् आनीतः वृन्दावनानीतः। भय-भीत-भीति-भीभिः आनीतादिभिश्च सह पञ्चम्यन्तं विष्णुपदं समस्यते। कृष्णभयमिति कृष्णाद्भयमिति विग्रहः। एवं कृष्णभीतः, कृष्णभीतिः कृष्णभीभिरिति।

वृन्दावनानीतमिति वृन्दावनादानीतमिति विग्रहः ॥२१॥

**षष्ठी परपदेन ॥२२॥**

तव प्रभुः, त्वत् प्रभुः। परपदेन सह षष्ठ्यन्तं समस्यते। तव-प्रभुः त्वत्प्रभुः, युष्मादस्मदावुत्तरपद प्रत्यययोरेकत्व इत्यनेन त्वदादेशः कृष्णस्य पुरुषः कृष्णपुरुषः ॥२२॥

**तरान्त गुणेन तरलोपश्च ॥२३॥**

सर्व्वेषां मध्ये कृष्णतरः, सर्व्वकृष्णः।

तरान्त गुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते। तरलोपश्च भवति। सर्व्वेषामिति निर्द्धारणे षष्ठी इति सूचयितुं मध्य

इत्युक्तम् । कृष्ण तर इति गुणप्रकर्षे तरस्तद्धितः ॥२३॥

**सप्तमी शौण्डादिभिः ॥२४॥**

भक्तौ शौण्डः भक्तिशौण्डः । भक्तौ प्रवीणः भक्तिप्रवीणः, तीर्थे काक इव तीर्थकाकः ॥२४॥ इति मध्यपदलोपिनः ।

इति कृष्णपुरुषप्रकरणमुद्दिष्टम् ।

शौण्डादिभिः सह सप्तम्यन्तं विष्णुपदं समस्यते, भक्तिशौण्डः—भक्तौ शौण्ड इति विग्रहः । शौण्डः—प्रगल्भः । भक्तौ प्रवीणः भक्तिप्रवीणः, तीर्थे काक इव तीर्थकाकः, तद्वदनवस्थित इत्यर्थः ॥२४

## अथ पीताम्बर समासः ।

**अनेकमन्यपदार्थे पीताम्बरः ॥२५॥**

पीतं अम्बरं यस्य स पीताम्बरः ।

पीतं सूक्ष्मं चाम्बरं यस्य स पीतसूक्ष्माम्बरः । उज्ज्वलपीतसूक्ष्माम्बरः । प्राप्तः कृष्णं यत्र प्राप्तकृष्णं गोकुलम् । कृष्णं प्राप्तो येन स प्राप्तकृष्णो वैष्णवः । प्राप्तः कृष्णो यया सा प्राप्तकृष्णाभक्तिः । दत्तं सर्वस्वं यस्मै स दत्तसर्वस्वः कृष्णः । प्राप्तो वरो यस्मात् स प्राप्तवरः कृष्णः । न्यस्तं मनो यस्मिन् स न्यस्तमनाः कृष्णः इत्यादि ॥२५॥

अनेक नामपद अन्य पदार्थ वाचक में परस्पर सम्बन्धान्वित होते हैं, इसको पीताम्बर समास कहते हैं । प्राचीन के मतमें बहुव्रीहि समास है । अन्यपदार्थ के समान लिङ्ग होता है । अन्य पदार्थ का उल्लेख यत् शब्द एवं इदं शब्द के द्वारा होता है । इसमें दो, तीन, चार शब्द मिलित होकर समास होता है । उदाहरण—पीतं अम्बरं यस्य सः—पीताम्बरः । पीतं सूक्ष्मं अम्बरं यस्य सः—पीतसूक्ष्माम्बरः । एवं

उज्ज्वलपीतसूक्ष्माम्बरः। प्राप्तः कृष्णो यत्तत् प्राप्तकृष्णं गोकुलम्, कृष्णः प्राप्तो येन स प्राप्तकृष्णो वैष्णवः। प्राप्तः कृष्णो यया सा प्राप्तकृष्णाभक्तिः। दत्तं सर्व्वस्वं यस्मै स दत्तसर्व्वस्वः कृष्णः। प्राप्तो वरो यस्मात् स प्राप्तवरः कृष्णः। न्यस्तं मनो यस्मिन् स न्यस्तमनाः कृष्ण इत्यादयः ॥२५॥

**सहशब्दस्तृतीयान्तेनैकक्रियायोगे ॥२६॥**

रामेण सह सहरामो वर्त्तते गच्छति वा कृष्णः। अत्र सहस्य स भावो वक्ष्यते। स रामः। एकक्रियायोगाभावे तु सह शिशुना दधि मथ्नाति यशोदा। एकक्रियायोगे सति तृतीयान्तेन सह सहशब्दः समस्यते। स च पीताम्बर संज्ञः। रामेण सहेति विग्रहः। सह रामः वर्त्तते गच्छति वा कृष्णः—इति। अत्र एकक्रियायां कृष्णस्य रामस्य च योगः। सह शब्दस्य स्थाने स भावो वक्ष्यते पीताम्बर समासे। एकक्रियायोगाभावे सति पीताम्बरसमासो न भवति। उदाहरणं—सह शिशुना दधि मथ्नाति यशोदा। विद्यमानार्थोऽत्र सहशब्दः, ततश्च सह शिशुनेति शिशौ विद्यमाने सति यशोदा दधि मथ्नाति इत्यर्थः ॥२६॥

**इति पीताम्बरसमासः।**

—SSS × SSS—

# अथ रामकृष्ण-समासः

**इतरेतरयोग-समाहारयो रामकृष्णः।**

तयोर्गम्ययोः पदद्वयस्य पदानां वा समासो वाच्य, स च रामकृष्ण संज्ञः। द्वन्द्व इति प्राञ्चः। तत्रेतरेतरयोगे प्रायः परवदेव लिङ्गम्। रामश्च कृष्णश्च रामकृष्णौ। एवं बहुद्वन्द्वे

राम-कृष्ण-श्रीदामानः। च शब्दस्य समुच्चयान्वाचयेतरेतरयोग-समाहररूपार्थाश्चत्वारः। तेषूद्भूतावयवसंख्य इतरेतरयोगः। तिरोहितावयवसंख्य संहतिप्रधानः समाहारः। तयोर्गम्ययोः पदद्वयस्य पदानां वा समासो वाच्यः, स च रामकृष्णसंज्ञः। द्वन्द्व इति प्राञ्चः। तत्रेतरेतरयोगे प्रायः परवदेव लिङ्गम्। तत्र रामश्च कृष्णश्चेति विग्रहे रामकृष्ण इति द्वाविति च शब्दार्थः, रामकृष्णौ। एवं बहुत्वे रामकृष्णश्रीदामानः। समुच्चये तु रामश्च भुङ्क्ते कृष्णश्च वा, रामः कृष्णः प्रत्येकमित्यर्थः। अन्वाचये—तद्वदर्थत्वेऽपि अनिमस्यानाग्रहविषयत्वमिति भेदः। कृष्णमनुगच्छ बलञ्च पश्य इति वत्। रामञ्च कृष्णञ्च पश्य—इत्यादौ सापेक्षत्वात् न समासः। किञ्च, द्वन्द्वात् परः पूर्व्वो वा श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते, रामकृष्ण-सौन्दर्य्यं। अ-इद्वयम् ॥२७॥

**समाहारे ब्रह्मत्वमेकत्वञ्च।**

**यजुर्विहित-ससोमकयागानामक्लीवानाम् ॥२८॥**

अर्कश्च अश्वमेधश्च अर्काश्वमेधम्। क्लीवे तु राजसूय वाजपेये इत्यादि।

समाहार होने पर ब्रह्मत्व एवं एकत्व होगा ॥२८॥ ब्रह्मलिङ्ग व्यतीत यजुर्विहित स-सोमक याग का समाहार होना है। स सोमकश्च ते यागाश्चेति ससोमकयागाः, यजुर्विहिताश्च ते ससोमकयागाश्चेति विग्रहः। ससोमका इति सोमपानोपलक्षिता इत्यर्थः। अर्काश्वमेधम्। अर्कश्च अश्वमेधश्चेति यागविशेषस्य अर्कस्य अश्वमेधस्य च यजुर्विहितत्वं ससोमकत्वञ्चास्ति। राजसूय-वाजपेये यजुर्विहितत्वं ससोमकत्वञ्चास्ति, किन्तु क्लीवत्वात् न समाहारः ॥२९

**गवाश्वादीनाम् ॥३०॥**

गौश्च अश्वश्च गवाश्वम्। कुब्जवामनम्, भागवती-

भागवतमित्यादि। गवाश्वादिका समाहार होगा। गौश्च अश्वश्च गवाश्वं, गवाविकमिति—अविको मेषः। कुब्जश्च वामनश्च कुब्जवामनम्। भागवती च भागवतश्च भागवतीभागवतम्। लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रं चेद्विशेष इत्यनेन एकशेषो न भवतीति ज्ञेयम् ॥३०॥

**वृक्ष-मृग-शकुनि-तृण-धान्यविशेषाणाञ्च वा बहुत्वे ॥३१॥**

प्लक्षवटः, प्लक्षवटा वा। हंसचक्रवाकम्, कुशकाशं, व्रीहियवम्। एवं दधिघृतमित्यादि। पक्षे दधिघृता वा इत्यादि।

वृक्ष प्रभृति शब्दों का बहुवचन विषय में समाहार समास विकल्प में होगा। प्लक्षाश्च वटाश्च प्लक्षवटम्, पक्षे प्लक्षवटाः। प्लक्षः पर्कटी। हंसचक्रवाकम्—शकन्युदाहरणम्। शकुनि शब्द पक्षिवाचकः। कुशकाशमिति, तृणोदाहरणम्। व्रीहियवमिति धान्यविशेषोदाहरणम्। व्यञ्जनवाचिनां समाहारो वा भवति। दधिघृतमित्यादि, पक्षे—दधिघृता वा ॥३१॥

**उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोः ॥३२॥**

राधाकृष्णाविमौ कृष्णराधे इमे। कृष्णपुरुषे तु अर्द्धामलकी, कृष्णभार्या मुखचन्द्रः। रामकृष्णे कृष्णपुरुषे च उत्तरपदवल्लिङ्गं भवति। राधाकृष्णाविति। अत्र उभयपदार्थप्रधानत्वेऽपि उत्तरपदवदेव लिङ्गं भवति। एवं कृष्णराधे—इति।

कृष्णपुरुष समास में—अर्द्धा आमलक्याः इति विग्रहे अर्द्धामलकी, कृष्णस्य भार्य्या कृष्णभार्या, मुख चन्द्रः इव इति विग्रहे मुखचन्द्रः। उपमेयं व्याघ्रादिभिरुपमानैरित्यनेन। श्यामरामः ॥३२॥

**अशालार्था च ॥३३॥**

गोपीनां सभा समूहः—गोपीसभम्।

शाला भिन्न अर्थवाचि शब्दसमूह का समाहार समास होगा। गोपीनां सभा समूहः गोपीसभम्। स्त्रीणां सभा स्त्रीसभम् ॥३३॥

इति रामकृष्ण-समास-निर्णयः।

—:+:—

## अथ अव्ययीभावः।

**अव्ययं सप्तम्याद्यर्थेषु नित्यम् ॥३४॥**

हरिमधिकृत्य प्रवृत्तेति अधिहरि कथा प्रवर्त्तते। अव्ययीभाव-समासस्य अव्ययत्वं ब्रह्मत्वञ्च भवति।

सप्तमी प्रभृति अर्थ प्रतीत होने पर नामपद के सहित नित्य अव्यय का समास होता है। नित्यसमासानां स्वपद विग्रहो नास्ति। हरिमधिकृत्य प्रवृत्तेति विग्रहे हरिमधीति स्थिते—सूत्रे तृतीयान्तेन प्रथमान्तं निपात्यते। नियम से प्रथमान्त पद का पूर्व्व निपात होने से अधिहरि कथा प्रवर्त्तते ॥३४॥

तत्र समीपे, कृष्णस्य समीपमिति विग्रहे—

**अरामान्तादव्ययीभावान्न स्वादेर्महाहरः किन्त्वम्, स च पञ्चमी वर्ज्जम् ॥३५॥**

उपकृष्णम्। पञ्चम्यान्तु उपकृष्णात्।

अरामान्तादव्ययीभावादुत्तरस्य स्वादेर्महाहरो न भवति। किन्तु तस्य स्थाने अम् भवति। सच अम् पञ्चमी वर्ज्जं भवति, तस्मात् पञ्चम्या स्थाने अम् न भवतीत्यर्थः। अव्ययीभावस्य अव्ययत्वात् अव्ययात् स्वादेर्महाहर इत्यनेन स्वादेर्महाहरः स्यादिति स्वादेर्महाहरो निषिद्धः। कृष्णस्य समीपमिति विग्रहे—उपकृष्णम्। पञ्चम्यान्तु उपकृष्णात् ॥३५॥

**तृतीया सप्तम्योस्तु वा ॥३६॥**

उपकृष्णेन, उपकृष्णम्, उपकृष्णे, उपकृष्णम्, उपकृष्णे, उपकृष्णम्। समृद्धौ तु—माथुराणां समृद्धिः सुमाथुरम्।

अरामान्त अव्ययीभाव के उत्तर तृतीया सप्तमी के स्थान में विकल्प में अम् होता है। एवं समृद्धयादि अर्थमें भी अव्ययीभाव समास होता है। उपकृष्णेन, उपकृष्णम्, उपकृष्णे, उपकृष्णम्, समृद्धि अर्थमें माथुराणां समृद्धिः—सुमाथुरम्। सप्तम्या नित्यमम्भाव इति बाहुल्यादिति शेषः ॥३६॥

**अनतिक्रमे ॥३७॥**

उक्तिमनतिक्रम्य यथोक्ति।

अनतिक्रम अर्थमें अव्ययीभाव समास होगा। यथा—शब्दस्य अनतिक्रमे उक्तिमनतिक्रम्य यथोक्ति, शक्तिमनतिक्रम्य यथाशक्ति, एवमन्येऽपि—ये ये वृद्धा यथावृद्धम्। ये ये तथाभुता यथातथामित्यादयः ॥३७॥

**इति अव्ययीभावः।**

—SSS × SSS—

# अथ समासकार्य्यविशेषाः

तत्र पूर्व्वनिपातः—

**राजादीनां दन्तादिभ्यः ॥३८॥**

दन्तानां राजा राजदन्तः। राजविद्या, राजगुह्यम्, अधोभुवम्, ऋणे अधमः अधमर्णः, इत्यादि। व्यभिचरति च नरनारायणौ। इति पूर्व्वनिपाताः।

पूर्व्वनिपात होगा। षष्ठयन्त का पूर्व्वनिपात होगा। दन्तानां राजा, राजदन्तः, विद्यानां राजा—राजविद्या, गुह्यानां राजा, राजगुह्यम्। भुवनस्य अधः, अधो भुवनम्। ऋणे अधमः— अधमर्णः, नरनारायणौ, अत्र पूजितत्वात नारायणस्यैव पूर्व्वनिपातः स्यात्, अतः उक्तं—व्यभिचरति च ॥३८॥

**एकस्य शेषो रामकृष्णे ॥३९॥**

**तुल्यशब्दानां भिन्नार्थानामपि एकस्य शेषः स्यात् ॥४०॥**

गोपी च गोपी च गोप्यौ, विशेषतस्तु गोपाश्च गोप्यश्च गोपाः। कृष्णश्च अर्ज्जुनश्च तौ कृष्णौ। एवं गोपश्च गोपश्च गोपश्च गोपाः। स च वैष्णवश्च तौ। यश्च कश्च कौ। स च त्वञ्च युवाम्। स च त्वञ्च अहञ्च वयम्। इत्येकशेषः। इति समासकार्य्याणि।

रामकृष्ण समास में एकशेष समास होगा। एकार्थ एवं भिन्नार्थ तुल्यार्थ शब्दसमूह का एकशेष समास होगा। गोपी च गोप्यो च गोप्यौ। गोप्यौ अवशिष्ट शब्द से गोपीद्वय का बोध होता है। एवं गोपश्च गोपश्च गोपौ, सर्वत्रावशिष्ट एव लुप्तस्य शक्त्यारोपो दृश्यते। कृष्णश्च अर्ज्जुनश्च तौ कृष्णौ। एवं गोपश्च गोपश्च गोपश्च गोपाः। स च वैष्णवश्च तौ। यश्च कश्च कौ। स च त्वञ्च युवाम्। स च त्वञ्च अहञ्च वयम्। अन्यैः सहोक्तौ तदादेस्तदादिभिस्तु परपरस्य ॥३९-४०॥

**इति समासकार्य्याणि।**

  

# अथ द्विरुक्ति-प्रकरणम्

## सर्व्वस्य द्विरुक्तिः ॥४१॥

## आभीक्ष्ण्य-वीप्सयोः ॥४२॥

द्विरुक्ति प्रकरण आरम्भ करते हैं। यथायोग्य सब की द्विरुक्ति होती है। सर्व्व पद से धातु धातु विष्णुपद को नाम विष्णुपद को द्विरुक्ति विषय में जानना होगा ॥४१॥

आभीक्ष्णस्य निरन्तरस्य भाव आभीक्ष्ण्यम्। व्याप्तुमिच्छा वीप्सा। आभीक्ष्ण्य-वीप्सयोरर्थयोः सर्व्वस्य द्विरुक्तिर्भवति। अत्र आभीक्ष्ण्ये प्रथमं दर्शयति। भजति भजति—पुनः पुनः, भजतीति। नैरन्तर्य्यं यथा—पुनः पुनः नत्वा स्तौतीति नत्वा नत्वा स्तौतीति, नामं नामं स्तौतीति वा। वीप्सायामिति गृहं गृहं प्रवेशमास्ते हरिरिति। गृहे गृहे वैष्णवाः। वैष्णवो वै रमणीयः। इत्यत्र पूर्व्ववत् सर्व्वे वैष्णवा रमणीय-गुणेन युगपद्व्याप्तयाभिता इति द्विरुक्तिः ॥४२॥

## उपर्य्यध्यधसां सामीप्ये ॥४३॥

उपर्य्युपरि, अध्यधि, अधोऽधो गोवर्द्धनम्। यर्हि सामीप्ये न स्यात्, तर्हि किम्? सर्व्वस्योपरि कृष्णः ॥४३॥

सामीप्ये विवक्षितेऽर्थे वर्त्तमानानामुपर्य्यध्यधसां द्विरुक्तिर्भवति। सामीप्यं प्रत्यासन्नं तच्च देशकृतं कालकृतं वा गृह्यते। उपर्य्युपर्य्यादित्रयाणां गोवर्द्धनेनान्वयः। उपरि उपरि, अधि अधि, अधो अधो। सामीप्ये किं किमर्थं यर्हि न स्यात्। सर्व्वस्योपरि कृष्ण इति सर्व्वस्य मूर्द्धनि कृष्णो वर्त्तते इत्यर्थः ॥४३॥

## आधिक्ये तु ॥४४॥

अहो भाग्यं भाग्यम्। "अहो भाग्यमहो भाग्यं नन्दगोप

व्रजौकसाम् ।" (श्रीमद्भागवतम् १०।१४।३२)

आधिक्यं—अतिशयितं, तस्मिन्नर्थे वर्त्तमानस्य तु पदस्य द्विरुक्तिर्भवति। अहो आश्चर्य्यं भाग्यभाग्यमिति—भाग्यस्यातिशयित्व मित्यर्थः। अहो भाग्यमित्यस्य यन्मित्र परमानन्दं पूर्णं ब्रह्म सनातनमिति। अत्र द्विर्वचने भाग्यस्याधिक्यं प्रतीयते इत्यन्वयः ॥४४

**चापले यावद्बोधम् ॥४५॥**

कृष्णः, कृष्णः, कृष्णः, पश्य पश्य पश्य। यावद्बोधमिति—बोधमनतिक्रम्य इत्यव्ययीभावसिद्धम्। चापलं चाञ्चल्यं, तस्मिन् गम्ये, यावद्बोधं जायते, तावत् चापलबोधकस्य पदस्य द्विर्भवति। कृष्ण इत्यादित्रयस्य पश्येत्यादित्रयेन यथासंख्यमन्वयः ॥४५॥

**इति संक्षेप-श्रीहरिनामामृताख्ये वैष्णव-व्याकरणे**

**समासादिप्रकरणं षष्ठं समाप्तम् ॥६॥**

…०:※:०…

[सप्तमम्]

# अथ तद्धित-प्रकरणम्

**अर्द्धर्च्चादिप्रयोगाश्च यन्निमित्तमिहोदिताः ।**
**इयं मे तद्धित-व्याख्या तद्धितत्वाय कल्पताम् ॥१॥**

अर्द्धर्च्चेति—ऋचः अर्द्धमर्द्धमर्द्धर्च्चः, स च आदिर्येषां तेऽर्द्धर्च्चादयः, ते च प्रयोगाश्चेति अर्द्धर्च्चादिप्रयोगा इति प्रथमोऽर्द्धर्च्चेत्यत्र वेदाक्षरस्य ऋचः प्रदर्शनादस्मिन् ग्रन्थे वेदाक्षरस्यैव प्राधान्यम् । अतएव तदादिप्रयोगानुशीलकानां वेदार्थानुशीलनफलवत्त्वात् हरिनामभिर्वैष्णवानां कालक्षेपनमुचितमित्यस्य न व्यभिचारः, संज्ञा शब्दानां यथाकथञ्चिदित्युक्तदिशा तस्मै हितस्तद्धित इति सञ्ज्ञाशब्दस्य व्याख्या ।

इह सप्तमे पादे यन्निमित्तं लक्षणया यस्य सन्तोषार्थं मे मया अर्द्धर्च्चादय एव प्रयोगा उदिताः कथितुमारब्धाः, इयं मे मम च सम्बन्धिनी मत्कर्त्तृका वा तद्धितव्याख्या तद्धितैरुपलक्षिता व्याख्या तद्धितत्वाय कल्पतां, तद्धारितत्वेन परिणमतामित्यन्वयः । उदिता इत्यारम्भे क्तः । आरम्भार्थे क्तस्य वर्त्तमान् प्रयोगित्वाद्वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठी वेत्यनेन मे इत्यस्मिन् कर्त्तरि षष्ठी । पक्षे सम्बन्ध षष्ठी च । प्रयोगाश्चेत्यत्र चार्थस्य प्रयोजनाभावत्वात् पुनरर्थत्वेन मे इति सम्बन्धषष्ठ्यन्तेन सम्बन्धः । केवलं तद्धितानां व्याख्या तद्धितत्वेन कल्पते, अपितु तद्धितास्तद्व्याच, अतएव तद्धितोपलक्षिता तद्धितसहितेत्यर्थः । ममोक्त तद्धितव्याख्या सर्व्वेषां निरपेक्ष-हितकारिणस्तस्य हितत्वेन परिणाम-कल्पना नोचितेति तद्धारितत्वेन तस्मिन् समर्पितत्वेनेत्यर्थः । तद्धितत्वायेत्यत्र

च डुधाञ् धारणपोषणयोरित्यस्माद् भावे क्तः। दधातेर्हिरित्यनेन हिः। तस्मादनेन भगवत्यर्पितत्वेन ग्रन्थकृता परममङ्गलमाचरितम्। एवं सर्व्वोऽयं ग्रन्थो मङ्गलरूपः—इति च विज्ञापितमिति। एवं मत्कृतमङ्गलाचरणस्यापि।

व्याकरणपक्षे तु—इह तद्धितपादे यन्निमित्तं येभ्यश्छात्रेभ्यो निमित्तं अर्द्धर्चादि तद्धितप्रयोगा मयोदिताः कथयितुं प्रस्तुताः मम इय तद्धितव्याख्या च तद्धितत्वाय तेषां छात्राणां नानार्थबोधक-द्वारा परमपारितोषिकत्वेन कल्पतां समर्था भवतु, पोषणरूप-धात्वर्थस्य पारितोषफलत्वात।

इस अन्तिम सप्तम पादमें जिनके सन्तोषार्थ मैंने अर्द्धर्चादि प्रयोग को कहना प्रारम्भ किया, यह तद्धित व्याख्या उनकी प्रसन्नता के हेतु हो।

व्याकरण पक्षमें—जिन छात्रों के निमित्त यह अर्द्धर्चादि प्रयोग प्रकरण मैंने आरम्भ किया, यह प्रकरण उन सबके बोध हेतु हो (१)

## आदिसर्व्वेश्वरस्य वृष्णीन्द्रो नृसिंहे ॥१॥

गार्ग्यः। इण्—दाक्षिः। औपगवः। ईयश्च—प्रालेयं, कैकेयः। देविकादिः, आरामरूप एव वृष्णीन्द्रः, अण् दाविकम्, शांशपम्, दार्घसत्रम्, श्रायसम्।

गर्ग—यण् अ-इद्वयस्य हरः। गार्ग्यः। दक्ष इण् दाक्षिः। उपगु अण् उद्वयस्य गोविन्दः, औपगवः। प्रालेयादीनां यादेरीयश्च। अण्—प्रालेयम्, कैकेयः। देविका-शिंशपा-दीर्घसत्र-श्रेयसारामः। एषामारामः। एषामारामरूप एव वृष्णीन्द्रः। अण् दाविकं, शांशपं, दार्घसत्रं, श्रायसम् ॥१॥

वृष्णीन्द्रस्थान-चतुःसनादेश-विष्णुपदान्तयोर्द्वारादिस्थयोश्च वृष्णीन्द्रं निषिध्य य-वरामयोरै-यौ-वौ, न तु स्वागतादेः।

अणि—व्याकरणमधीते वेद वेति व्याकरणस्येति इत्यत्र यरामस्यैयादेशे—वैयाकरणः। इणि—स्वश्वस्यापत्यं पुमानिति सौवश्विः। वृष्णीन्द्रे कृते—सौवाश्विः।

वृष्णीन्द्रस्य स्थानं वृष्णीन्द्रस्थानञ्च तच्चतुःसनश्चेति वृष्णीन्द्रस्थानचतुःसनः। आदेशश्च आदेशश्च आदेशौ विष्णुपदान्तश्च विष्णुपदान्तश्च विष्णुपदान्तौ आदेशौ च तौ विष्णुपदान्तौ चेति आदेशविष्णुपदान्तौ, वृष्णीन्द्रस्थान-चतुःसनस्य आदेशविष्णुपदान्तौ वृष्णीन्द्रस्थानचतुःसनादेशविष्णुपदान्तौ तयोर्यरामयोः। द्वार आदिर्यस्य स द्वारादिस्तस्मिन् स्थीयेते इति द्वारादिस्थौ तयोश्च यवरामयोः। स्वागत आदिर्यस्य स स्वागतादेर्यवरामयोस्तु नेति द्रष्टव्यम्। सूत्रे वृष्णीद्रस्थानेत्युक्तत्वात् वृष्णीन्द्रहेतौ प्रत्यये इत्यर्थाद् गम्यते। अत्र नृसिंह परे इति ज्ञेयम्। अणिति रूपं दर्श्यते—व्याकरणमधीते वेद वेति व्याकरणस्य वा इत्यत्र यरामस्यैयादेशे वैयाकरणमिति।

स्वश्वस्यापत्यं पुमानिति सौवाश्विः। यदा वृष्णीन्द्रः स्यात्तदा सौवाश्विरिति स्यात् ॥२॥

न्यग्रोधश्च, श्वापदो वा ॥३॥

नैयग्रोधम्। नेह न्याग्रोधमूला वैष्णवाः। शौवापदम्। स्वागतिकम्, व्यवहारिकः। इणि—व्याड़स्यापत्यं पुमानिति व्याड़िः। अत्र द्वारादौ केवलो न्यग्रधो वटस्तस्य विकारोऽवयवो वा फलमित्यर्थे नैयग्रोधम्। अत्र न्यग्रोदस्य विकारोऽवयवो वा फलमिति महाहर-विषये लक्षादित्वात् केशव-णः। न्यग्रोधो बहुपाद् वट

इत्यमरः। नेहेति सूत्रे केवलशब्दोपादानादिति शेषः। न्यग्रोधस्य मूलं न्यग्रोधमूलं तत्र स्थिता अमी इत्यर्थे न्यग्रोधमूला इति केशवान्तम्। श्वापदो वा। श्वापदो द्वारादिर्वा भवति। श्वापदस्येति श्वापदादिद्वयम्। श्वापदं, शौवापदम्। स्वागतास्देस्तु। शोभनमागतं स्वागतं तदर्हतीति स्वागतिकः। तथा व्यवहारिकः। अत्र तदर्हतीत्यर्थे माधव-ठः। व्याड़स्यापत्यं पुमानिति व्याड़िः। अराम वाहृवेत्यनेनात्र इ नृंसिंहः। व्याड़िः पण्डितविशेषः ॥३॥

## उत्तरपदस्य ॥४॥

गुरुलाघवं, पितृपैतामहम्। वातपित्तयोः, शमनं कोपनं वेति वातपैत्तिकम्। पूर्व्व वर्षासु भवः पूर्व्ववार्षिकः। सर्व्वं शौरसेनकः, द्विसाम्वत्सरिकः, द्विवार्षिकः। द्विनैष्किकम्।

आदिसर्व्वेश्वरस्येति—अनुवर्त्तन एव। गुरुलघ्वादेः। उत्तर पद का वृष्णीन्द्र होता है। नृसिंह परे रहने से गुरु लघु शब्द के उत्तर पद के आदि सर्व्वेश्वर का वृष्णीन्द्र होता है। गुरुलघ्वोरिदं गुरुलाघवम्। पितृ-पितामहयोरिदं—पितृपैतामहम्, तस्येदमित्यनेन केशव-णः। वातपित्तयोः शमनं कोपनं वेत्यर्थे वातपैत्तिकम्। एवं वातश्लैष्मिकम्। अवयवादृतोः। पूर्व्ववर्षासु भवः पूर्व्ववार्षिकः, वर्षाणां पूर्व्वभागे जात इत्यर्थः। सुसर्व्वार्द्धेभ्यो देशनाम्नः। सुशौरसेनकः, सुशूरसेनेषु जातादिरित्यर्थे सुशौरसेनकः। एवं सर्व्वशूरसेनेषु जातः सर्व्वशौरसेनकः, अर्द्धशौरसेनकः। संख्यातः संवत्सर-संख्ययोः।

सख्या वाचक शब्द के उत्तर संवत्सर संख्या वाचक शब्द के आदि सर्व्वेश्वर का वृष्णीन्द्र होता है। द्विसांवत्सरिकः, द्वाभ्यां संवत्सराभ्यां निवृत्तः, द्विवार्षिकः। द्वौ वर्षावधीष्टः। संख्यायाः परिमाणस्याणस्य, द्विनैष्किकम्। द्वौ निष्कौ परिमाणमस्येति द्विनैष्किकम् ॥४॥

### उभयोः पदयोः ॥५॥

सौहार्द्दं, सौभाग्यम्, आनुशातिकम् । उभयपदवृद्धिः— पौण्ड्रनागरः, कौरजाङ्गलः, आर्द्धद्रौणिकम् ।

नृसिंह परे रहने से उभयपद का वृष्णीन्द्र होता है। हृद्भगसिन्ध्वन्तानां, हृद् भगसिन्धवः अन्ते येषां ते हृद्भगसिन्ध्वन्ता स्तेषां हृद्भगसिन्ध्वन्तानामुभयपदयोरादिसर्व्वेश्वरस्य वृष्णीन्द्रः स्यान्नृसिंहो द्वन्द्वात् परः पूर्व्वो वेत्युक्तादन्तशब्देन सह सर्व्वेषामन्वयः। सुहृदः इदं–सौहार्द्दम् । सुहृन्मित्रे इत्यनेन शोभनं हृदयमस्येति पीताम्बरे निपातात् सुहृच्छब्दात् तस्येदमित्यनेन केशव-णः। तथा सुहृदयशब्दादपि सुहृदयस्य भाव इत्यर्थे केशव-णे कृते हृदयस्य हृल्लेखलाशयोर्याणोश्चेत्यनेन हृदादेशे च कृते सौहार्द्दमिति च। हृदय-समानार्थो यो हृच्छब्दस्तदन्तस्याप्येवं भवति । हृदिति सामान्यग्रहणात्। सुभगस्य भाव इत्यर्थे सौभाग्यमित्यत्र ब्राह्मणादे-राकृतिगणत्वात् नृसिंह-यः । अनुशतमादिर्येषां ते अनुशतादयः, तेषामनुशतादीनां नृसिंहे पदे पूर्व्वपदस्योत्तरपदस्य चादिसर्व्वेश्वरस्य वृष्णीन्द्रो भवति । आनुशातिकमिति शतेन क्रीत इत्यर्थे शताद् ठराम-वशतात्मके इत्यनेन शतात् ठरामः, शतिकः, पश्चात् अनुगतः शतिको येन सोऽनुशतिकः तस्मात् तस्येदमित्यनेन केशव-णः। उभयपदवृद्धि। पौण्ड्रनागरः, कौरुजाङ्गलः, आर्द्धद्रौणिकम् ॥५॥

### अशुच्यादीनां पीताम्बर-सिद्धानामपि वा ॥६॥

आशौचम् अशौचं वा । आनैश्वर्य्यम्, अनैश्वर्य्यं वा, आयाथातथ्यम्, अयथातथ्यं वा ॥६॥

इति वृष्णीन्द्रो निवृत्तः।

नञ् शुचीश्वर-क्षेत्रज्ञ-कुशल-निपुणादीनां पूर्व्वस्य तु वा। उत्तरपदस्य वृद्धिरेव। आशौचं अशौचं। आकौशलं अकौशलम् ।

आनैपुणम् अनैपुणम् । अनीश्वराक्षेत्रज्ञौ तत्पुरुषावेव ब्राह्मणादित्वाद् भाव य-णन्तौ । आनैश्वर्य्यम अनैश्वर्य्यम् । नञ् उत्तरेषां शुच्यादि पञ्चानामादिसर्व्वेश्वरस्य वृष्णीन्द्रो नृसिंहे पूर्व्वस्य तु नञो वा स्यात् । अशौचमिति—अशुचेरिदमित्यर्थे तस्येमित्यनेन केशव-णः । एवम-कुशलस्येदम्, अनिपुणस्येदमिति । न ईश्वरः अनीश्वरस्तस्य भाव इत्यर्थे आनैश्वर्य्यादिद्वयमिति । तथा अक्षेत्रज्ञस्य भावः आक्षैत्रज्ञम् । अनयोरेवकारेण तत्पुरुषेऽववारणात् अशुच्यादीनां पीताम्बर-सिद्धानामपि आशौचमित्यादिकं स्यात् । न विद्यते शुचिर्यस्य सोऽशुचिस्तस्येदमित्यादि तु पूर्व्ववत् । भावे तु त्व त्वापौ ब्रह्म-लक्ष्म्यामित्यनेन अशुचित्वमशुचिता इत्यादि स्यात् । नञो यथातथ-यथापुरयोः पर्य्यायेण ।

नृसिंहे परे नञः परयोर्यथातथ-यथापुरयोरादिसर्व्वेश्वरस्य नञश्च पर्य्यायेण क्रमेण वृष्णीन्द्रो भवति । अयथातथा भावः अयथातथ्यम् । भावविहितनृसिंह ये कृते आयाथातथ्यम्, आयाथा-पुर्य्यमिति सिध्यत्येव ॥६॥

इति वृष्णीन्द्र-प्रकरणं समाप्तम् ।

## कृष्णादाप् ॥७॥

रमयतीति रमा, परमा । लक्ष्मीलिङ्गविषये नाम्न उत्तरे यथास्वं वक्ष्यमाणा आवीवाबूङ् च भवति । यद्यदीयं प्रकरणं प्राचीनैरत्र न पठ्यते, तथाप्युपयुक्तत्वात् अस्माभिः पठनीयम् । लक्ष्म्यां कृष्णात् कृष्णसंज्ञकात् आप् भवति । नाम्न इत्यस्याधिकार-त्वेन विधायकत्वाभावाद् विधिरम् । अरामान्त-कृष्णसंज्ञ इत्युक्तम् । पाणिनीयानां मतेराप् भवति । रमा शब्दस्य साध्यार्थं वाक्यं स्वयं दर्शयति—रमयतीति रमा, ततः आप्, अ-द्वयस्येत्यरामहरः । रमा लक्ष्मी, राधाविष्णुजनाभ्यामीपश्च त्रिविक्रमात् सोऽहरः । एव

राधसाध-संसिद्धौ राध्नोतीति पचाद्यात् पश्चादाप् राधा, कृष्ण-प्रेयसीनां मुख्या । परं परमेश्वरं मातीति मा माने इत्यस्मात् कर्म्मण्यनुपेन्द्रादारामात् क इति कः, आरामहरः कंसारीत्यनेनाराम-हरः। पश्चादाप् परमा लक्ष्मी शोभा वा ॥७॥

**ऋरामाच्चतुर्भुजानुबन्धादीप् ॥८॥**

कर्त्री । मनं मातृपचादींश्च वर्जयित्वा ऋरामान्तात् चतुर्भुजानुबन्धात् न-रामान्तात् अञ्चते वाहश्चोत्तरः लक्ष्म्यामीप् भवति । करोति येति कृ-धातोः शतृ तत ईप् कर्त्रीति ॥८॥

**इ-रामान्तादक्त्यर्थाद्वा ईप् ॥९॥**

रात्रिः, रात्री । क्तेरर्थ इव अर्थो यस्य स क्त्यर्थः, न विद्यते क्त्यर्थो यत्र सोऽक्त्यर्थस्तस्मात् । लक्ष्म्यमेवाक्त्यर्थात् इरामात् इरामान्तादीप् वा स्यात् । अर्थान्तराभावात् स्वार्थ एव प्रत्ययस्तेन रात्रिरेव रात्री रात्रिरिति । रात्रेस्त्रिरिति राधातोरौणादिकस्त्रि-प्रत्ययो रात्रिरित्यस्यैव रात्रीति द्वयमित्यन्ये ॥९॥

**व्यासादेरकिण् सच चित् ॥१०॥**

वैयासकिः। व्यासस्यापत्यं वैयासकिः । तस्यापत्यमित्यर्थे व्यासादेरुत्तरोऽकिण् स्यात्, स चाकिण् चिच्च स्यात् । व्यासस्यापत्यं पुमान् चित् करणात् संसारस्य हरश्चितीति संसारहरः, वैयासकिरिति ॥१०॥

**तस्य समूहे ब्रह्मण्यण् ॥११॥**

दैवम् । तस्य समूहो ब्रह्मणि—अत्रार्थे क्लीवे यथाविहितं स्यात् । देवानां समूहो दैवम् ॥११॥

**तददूरभवे च ॥१२॥**

यामुनः । तददूरभवश्च । तस्यादूरभवश्चेत्यर्थे एस्मिन्

तन्मर्द

...थास्वं प्रत्ययः स्यात्। एष्वर्थेषु सर्व्वत्र सामान्यतः केशव-...संख्य...त्। यमुनाया अदूरभवो यामुनः ॥१२॥

**तदपत्ये ॥१३॥**

वार्षभानवी। अत्रार्थे यथास्वं प्रत्ययाः स्युः। वृषभानोः अपत्यं स्त्री वार्षभानवी ॥१३॥

**आदिवृष्णीन्द्राच्छरामः, नामधेयाद्वा ॥१४॥**

वैष्णवीयः तदीय... आदिवृष्णीन्द्रात् छ-रामो भवेति, छ ईय। एवं नामधेयात् उत्तरे विकल्पेन छ-रामो भवति। उदाहरणम्—वैष्णवीयः, तदीयः ॥१४॥

**परजनदेवराजस्य कीयः ॥१५॥**

पर-जन-देव-राजशब्दादुत्तरे कीय-प्रत्ययो भवति। परकीयः जनकीयः, देवकीयः, राजकीयः ॥१५॥

**तस्य भावस्त्वतापौ ब्रह्मलक्ष्म्योः ॥१६॥**

परत्वं, परता। शब्दप्रवृत्तिनिमित्तं जात्यादिवस्तुधर्मः। तस्य भाव इत्यर्थे त्वतापौ स्याताम्। जातौ गोत्वं, गोता, गुणे—शुक्लत्वं, शुक्लता, रूपत्वं रूपता, रसत्वं रसता, क्रियायाम्—क्रियात्वं, क्रियाता। समास-कृत्तद्धितेषु सम्बन्ध एव प्रवृत्तिनिमित्तम्। कृष्णपुरुषत्वं, कृष्णपुरुषता, पूजकत्वं पूजकता, अनुग्राह्यत्वं अनुग्राह्यता, यादवत्वं यादवता, भागवतत्वं, भागवता। तस्य भाव इत्यर्थे नामस्त्वतापौ भवन्तौ यथासंख्यं ब्रह्मलक्ष्म्योर्वर्त्तेते। परत्वं परता ॥१६॥

**वर्णाद् दृढादेश्च नृसिंह-य इमनिश्च ॥१७॥**

माधुर्य्यं, मधुरिमा, सौन्दर्य्यं, लावण्यम्। वर्णाद्—शौक्लं शुक्लिमा, कार्ष्ण्यं, कृष्णिमा, दृढादेः—दार्ढ्यं द्रढिमा, वैमल्य

विमलिमा, त्वतापौ सर्व्वत्रोदाहार्य्यौ। इह गुणवच्च राधा, कृष्ण ये सिद्धे वर्णग्रहणमिमन्यर्थम्। वधिर-कृश-शीत-उष्णेते हृतादीनां दृढ़ादौ पाठः। पक्षे, इमनिर्यथा स्यात् कर्म्मणि च नृसिंह-यो माभूत् ॥१७॥

## तदस्य सञ्जाते तारकादेरितः ॥१८॥

पुष्पितम्, बाधितः। तारका सञ्जातास्य तारकितं नमः, पुष्पितो वृक्षः। तारका, पुष्प, सुख, दुःख फल, मूल, कुसुम, स्तवक, तन्द्रा, बुभुक्षा, पिपासा, भर, वेत, रोग, व्याधि, उत्कण्ठा, गर्भोऽप्राणिनीति। तदस्य सञ्जातमित्यर्थे तच्छब्दनिर्दिष्टात्नाम्नो यथास्वं प्रत्ययः स्यात् ॥१८॥

## मात्रट् प्रमाणमात्रे ॥१९॥

तन्मात्रम्, यन्मात्रम्। तदस्येत्यर्थे प्रमाणमात्रे वाच्ये तु नाम्नो मात्रट् स्यात्। तदेव प्रमाणमस्य तन्मात्रम्, तावदेव प्रमाणमस्य तावन्मात्रम् ॥१९॥

## प्रशंसायां रूपः ॥२०॥

वैष्णवरूपः, तद्रूपम्। प्रशंसा–स्तुतिः। प्रकृतिविशेषणञ्चैतत्। तेन प्रशंसाविशिष्टेऽर्थे वर्तमानान्नाम्नो रूपः स्यात्। अगृहीतार्थविशेषाः प्रत्ययाः प्रकृत्यर्थं विशेषयन्तीत्यतः प्रकृत्यर्थस्यैव ये लिङ्गवचने ते विशेषणस्यापि भवति इतिः। प्रशस्तः वैष्णवः, वैष्णवरूप इति। एवं प्रशस्तः पण्डितः, पण्डितरूपः इत्यादि ॥२०॥

## अत्यर्थे तरतमौ ॥२१॥

वैष्णवतरः, वैष्णवतमः, पूर्णतरः, पूर्णतमः। अतिशयार्थे नाम्न. तर-तमौ प्रत्ययौ भवतः। वैष्णवयोर्मध्ये अयं अतिशयवैष्णवः वैष्णवतरः, वैष्णवेषु मध्ये अयं अतिशयवैष्णवः–वैष्णवतम। एवं पूर्णतरः, पूर्णतमः ॥२१॥

**रूपविकारयोर्मयट् ॥२२॥**

तन्मयी, तन्मयम्। स्वरूपविकारार्थयोर्गम्यमानयो-
तन्मयः, तन्मयी, तन्मयम्—पुरुषोत्तमलक्ष्मीब्रह्म-
ख्यमन्वयः ॥२२

**संज्ञायां कः ॥२३॥**

वेणुकः, वंशकः। संज्ञायां वर्त्तमानान्नाम्नः कः स्यात्—वेणुनामा कश्चित् वेणुकः, एवं वंशकः ॥२३॥

**तदस्यास्त्य[illegible] वा मतुः ॥२४॥**

मतोर्मो वः—कृष्णवान्, भगवान्। तदस्यास्ति तस्मिन् वा अस्तीत्यर्थे नाम्नो मतुः स्यात्। अर्थद्वयस्य क्रमेणोदाहरणम्—गावोऽस्य सन्ति गोमान्–व्रजनाथः। कृष्णोऽस्त्यस्मिन्, मतोर्मो वः, कृष्णवान्। अद्वयमाभ्यां तदुद्भवाभ्यां विष्णुदासाच्च [illegible]र्मो वः। कृष्णवानित्यस्य गोवर्द्धनः, इति वाच्य पदं द्रष्टव्यम्।

भूमा-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्ति विवक्षायां मतुमुख्या भवन्ति ते॥

भूमा–प्रचुरः, अतिशायनः–अतिशयः। मतुर्मुख्य आदिर्येषां ते मतुमुख्याः। भूमादिष्वर्थेषु गम्यमानेषु तदस्यास्त्यस्मिन् वेत्यर्थे [illegible] प्रसिद्धा वक्ष्यमाणा मतुप्रभृतयो भवन्तीत्यर्थः। गोमान् इत्यत्र गावोऽस्य सन्त्यस्मिन् वेति गोशब्दस्य बहुवचनान्त-भूमत्वं गम्यते। दैत्यवान् कंसः, इत्यत्र दैत्योऽस्यास्त्यस्मिन् [illegible]त्यशब्दस्य निन्द्यत्वेन निन्दा गम्यते। यथार्थतः प्रशंसादि [illegible]सङ्गच्छते, इति तत्रैव प्रशंसादि गमयन्नुदाहणान्याह—[illegible]दाविति। रूपवानित्यत्र रूपमस्यास्त्यस्मिन् वेति निरपेक्ष-प्रशंसात्वेन प्रशंसागम्यते, भगवानिति। ऐश्वर्य्यस्य समग्रस्य [illegible] यशसः श्रियः। ज्ञानवैराग्ययोश्चेति षण्णां भगमितीङ्गना॥

इत्यनेन भगशब्दः षड़ैश्वर्य्यवाची सोऽस्यास्त्यस्मिन् ... शब्दस्यात्रैव नित्ययोगो गम्यतेऽन्यत्र तु कल्पितः ... राधा, कृष्णः। शार्ङ्गीति—शृङ्गेण निर्म्मितं शार्ङ्गं धनुस्त ... वेति शार्ङ्गस्यातिशायनत्वमत्रैव गम्यतेऽन्यत्र तु का ... नृसिंह-यो दण्डीति दण्डमत्र लगुड़स्तदस्यास्त्यस्मिन् वेति दण्डस्यात्र गम्यते। अस्तीति अस्ति विवक्षायान्त्वनियमत्वात् यस ... यास्मिन् वा क्रियास्ति स क्रियावानिति। शार्ङ्गी दण्डीत्यत्र अरामादिनि ठरामावित्यनेन इनिः स्यादित्याह— ... यते ॥२४॥

इति संक्षेप श्रीहरिनामामृते व्याकरणे
तद्धित-प्रकरणं सप्तमं समाप्तम् ॥७

माधवस्य सिते पक्षे सप्तम्यां गुरुवासरे।
माधवस्य प्रसादेन ग्रन्थोऽयं पूर्णतां गतः॥
रुद्रे ग्रहे विधौ शाके वृन्दारण्ये शुभास्पदे।
सज्जनानां हितार्थाय हरिदासेन मुद्रितः॥

इति श्रीहरिदासशास्त्रि-कृत सरलार्थसमन्वितं संक्षेप
श्रीहरिनामामृत-व्याकरणं समाप्तम्।

—SSS × SSS—

